प्रद्रुग्धे = प्र + द्रुह्, लट्
प्र० पु० एक०।

उपस्नुता = उप + स्नु
+ क्त + टाप्
= द्रवित हुई हुई।

दयावतः = दयावत् का
(षष्ठी) एक० का रूप।
दया ऽस्य ऽस्ति
इति दयावान्। दया +
मतुप्। मतुप् के म् को
व् आदेश हो गया।

समीहितुम् = सम् + ईह् + तुमुन्। करने के लिये

वाञ्छन्ति – वाञ्छ् धातु का लट् पुरुष का बहुवचन का रूप।

संहता: – सम् + हन् + क्त का बहुव।

**व्याकरणम्**—उदारकीर्त्तेः—उदारा कीर्त्तिः यस्य (बहु०) सः, तस्य। दयावतः—दया अस्य अस्ति इति, दयामतुप्, ष० एक०। प्रशान्तबाधम्—प्रशान्ता बाधा यस्मिन् (बहु०) तत्। अभिरक्षया—करणे तृतीया। वसूपमानस्य—वसु उपमानं यस्य (बहु०) सः, तस्य।

**विशेष**—मेदिनी—मेद इन् (मत्वर्थे इ निः)। मधु और कैटभ—इन दोनों दानवों के वध से उनकी चर्बी और मांस से आच्छादित पृथ्वी का नाम मेदिनी पड़ा।

मधुकैटभयोस्त्वासीन्मेदमांसपरिप्लुता।
तेनेयं मेदिनी देवी प्रोच्यते ब्रह्मवादिभिः॥

**हिन्दी**—रक्षा के उपायों से उपद्रवों को शान्त करके प्रजाजन की समृद्धि को सम्पन्न करते हुए और दयावान् परम यशस्वी एवं कुबेरोपम इस दुर्योधन के गुणों से प्रभावित होकर पृथ्वी अनायास सम्पत्ति प्रदान कर रही है॥१८॥

**महौजसो मानधना धनार्चिता**
**धनुर्भृतः संयति लब्धकीर्त्तयः।**
**नसंहतास्तस्य नभिन्नवृत्तयः**
**प्रियाणि वाञ्छन्त्यसुभिः समीहितुम्॥१९॥**

**अन्वयः**—महौजसः मानधनाः धनार्चिताः संयति लब्धकीर्त्तयः नसंहताः नभिन्नवृत्तयः धनुर्भृतः तस्य असुभिः प्रियाणि समीहितुं वाञ्छन्ति।

**व्याख्या**—महौजसो महाबलाः, अन्यथा दुर्बलानामनुपकारित्वादिति भावः। मानः कुलशीलाद्यभिमान एव धनं येषां ते मानधनाः। अन्यथा कदाचिद् धनलोभात् परपक्षमपि गच्छेयुरिति भावः। धनार्चिताः धनै-

रचिताः सत्कृताः। अन्यथा दारिद्र्यादेनं जह्युरिति भावः। संयति सङ्ग्रामे लब्धकीर्त्तयः बहुयशस इत्यर्थः। अन्यथा कदाचिन्मुह्येयुरिति भावः। संहताः मिथः सङ्गताः स्वार्थनिष्ठा न भवन्तीति नसंहताः। भिन्नवृत्तयो मिथो विरोधात् स्वामिकार्यकरा न भवन्तीति नभिन्नवृत्तयः, धनुर्भृतो धानुष्काः तस्य दुर्योधनस्य असुभिः प्राणैः प्रियाणि समीहितुं कर्त्तुं वाञ्छन्ति।

**वाच्यपरिवर्त्तनम्**—महौजोभिः मानधनैः धनार्चितैः संयति लब्धकीर्त्तिभिः नसंहतैः नभिन्नवृत्तिभिः धनुर्भृद्भिः तस्य असुभिः प्रियाणि समीहितुं वाञ्छयन्ते।

**व्याकरणम्**—महौजसः—महत् ओजः येषाम् (बहु०) ते। मानधनाः—मान एव धनं येषां (बहु०) ते। धनार्चिताः—धनेन अर्चिताः (तृ० तत्पु०)। लब्धकीर्त्तयः—लब्धा कीर्त्तिः यैः (बहु०) ते। नसंहताः—न संहताः (सुप्सुपा समासः)। नभिन्नवृत्तयः—न भिन्नाः वृत्तयः येषाम् (बहु०)।

**विशेष**—काव्यलिङ्ग अलङ्कार। यहाँ पर 'महौजस्' आदि पदार्थ प्राणदान कर्त्तव्य के प्रति हेतु रूप से कहे गये हैं। 'अत्र महौजस आदि पदार्थानां प्राणदानकर्त्तव्यतां प्रति विशेषणगत्या हेतुत्वाभिधानात् काव्यलिङ्गमलङ्कारः।'—मल्लिनाथ।

'महौजसः' आदि अभिप्रायगर्भित विशेषण हैं। अतः परिकर अलङ्कार भी है।

**हिन्दी**—महापराक्रमशाली एवं जिनका मान ही धन है तथा जिन्होंने युद्ध में यश पाया है, ऐसे धनुषधारी वीर पुरुष उसके द्वारा धन से सम्मानित होकर दलबन्दी तथा विरोधी गतिविधियों को न अपनाकर अपने प्राणों से उसका प्रिय करना चाहते हैं ॥१६॥

हिन्दी—वह, जिसका कोई भी काम अधूरा नहीं रहा, शुद्ध चरित्रवाले गुप्तचरों से राजाओं के समस्त कार्यों को जानता है। जैसे विधाता की इच्छा का वैसे ही उसकी विशाल योजनाओं का अनुमान अतिलाभकारी और परिणाम में सुखावह फल-सिद्धि के द्वारा ही निष्पन्न होता है ॥२०॥

न तेन सज्यं क्वचिदुद्यतं धनुः
कृतं न वा कोपविजिह्ममाननम् ।
गुणानुरागेण शिरोभिरुह्यते-
नराधिपैर्माल्यमिवास्य शासनम् ॥२१॥

अन्वयः—तेन क्वचित् सज्यं धनुः न उद्यतम्, आननं च कोपविजिह्मं न कृतम्। गुणानुरागेण नराधिपैः अस्य शासनं माल्यम् इव शिरोभिः उह्यते।

व्याख्या—तेन राज्ञा क्वचित् कुत्रापि सह ज्यया मौर्व्या सज्यं धनुर्नोद्यतं नोर्ध्वीकृतम्। आननं च कोपविजिह्मं कोपकुटिलं न कृतम्। यस्य कोप एव नोदेति कुतस्तस्य युद्धप्रसक्तिरिति भावः। गुणेषु दयादाक्षिण्यादिष्वनुरागेण प्रेम्णा। माल्यपक्षे—सूत्रानुषङ्गेण। यद्वा सौरभ्यगुणलाभेन नराधिपैरस्य शासनमाज्ञा मालैव माल्यं तदिव शिरोभिरुह्यते धार्यते।

वाच्यपरिवर्त्तनम्—सः क्वचित् सज्यं धनुः न उद्यतवान्, आननं च कोपविजिह्मं न कृतवान्। गुणानुरागेण नराधिपाः अस्य शासनं माल्यम् इव शिरोभिः वहन्ति।

व्याकरणम्—सज्यम्—ज्यया सह वर्त्तते इति (बहु०), 'तेन सहेति तुल्ययोगे'। कोपविजिह्मम्—विजिह्मम्—विशेषेण जिह्मम् (प्रादि तत्पु०);

कोपेन विजिह्मम् (तृतीया तत्पु०)। गुणानुरागेण—गुणेषु अनुरागः (सप्तमी (तत्पु०), सः, तेन।

नराधिपैः—नराणाम् अधिपाः (ष० तत्पु०) तैः। माल्यम्—माला एव माल्यम्, स्वार्थे ष्यञ्।

विशेष—'आननं कोपविजिह्मं न कृतम्।' उसने अपने मुख को क्रोध से कुटिल नहीं किया। उक्त वाक्य से उसकी शान्ति-प्रियता एवं युद्ध के लिए अरुचि प्रकट होती है। गुणानुरागेण—राजा के पक्ष में—दयादाक्षिण्यादि गुणों के प्रति प्रेम के कारण। 'गुणेषु प्रेम्णा।' माला के पक्ष में—सूत्र में गुँथे होने से अथवा सौरभ की लिप्सा से—सूत्रानुषङ्गेण, यद्वा सौरभ्यगुणलाभेन।

हिन्दी—उसने डोरी चढ़ाकर धनुष को किसी पर नहीं ताना। अपने मुख को क्रोध से कुटिल नहीं किया। उसके दयादाक्षिण्यादि गुणों से वशीकृत राजन्य उसके आदेशों को, जैसे सौरभ की लिप्सा से धागे में गुँथी हुई पुष्पमाला को, सिर पर धारण करते हैं ॥२१॥

स यौवराज्ये नवयौवनोद्धतं
निधाय दुःशासनमिद्धशासनः।
मखेष्वखिन्नोऽनुमतः पुरोधसा
धिनोति हव्येन हिरण्यरेतसम् ॥२२॥

अन्वयः—इद्धशासनः सः नवयौवनोद्धतं दुश्शासनं यौवराज्ये निधाय पुरोधसा अनुमतः अखिन्नः मखेषु हव्येन हिरण्यरेतस धिनोति।

व्याख्या—इद्धशासनोऽप्रतिहताज्ञः स दुर्योधनो नवयौवनोद्ध प्रगल्भम्। धुरन्धरमित्यर्थः। दुःखेन शास्यत इति दुश्शासनस्तम् यौवराज्ये युवराजकर्मणि निधाय नियुज्येत्यर्थः। पुरोधसा पुरोहितेनानु

  

मतोऽनुज्ञातः। तस्मिन् याजके सतीत्यर्थः। तदुल्लङ्घने दोषस्मरणादिति भावः। आखिन्नोऽनलसो मखेषु क्रतुषु हव्येन हविषा हिरण्यं रेतो यस्य त हिरण्यरेतसम् अनलं धिनोति प्रीणयति।

**वाच्यपरिवर्त्तनम्**—इद्धशासनेन तेन नवयौवनोद्धतं दुश्शासनं यौवराज्ये निधाय पुरोधसा अनुमतेन अखिन्नेन मखेषु हव्येन हिरण्यरेताः धिन्व्यते।

**व्याकरणम्**—इद्धशासनः—इद्धं शासनं यस्य (बहु०), सः। नवयौवनोद्धतम्—नवं यौवनम् (कर्म०), नवयौवनेन उद्धतः (तृ० तत्पु०) तम्। यौवराज्ये—युवा चासौ राजा चेति (कर्म०); युवराजस्य कर्म—यौवराज्यम्, युवराज+ष्यञ्।

निधाय—नि+धा+क्त्वा=ल्यप्।

अखिन्नः—न खिन्नः (नञ् तत्पु०)।

धिनोति—धिवि (धिन्व्०) लट् प्र० एक। प्रसन्न करता है।

**विशेष**—पुरोधसा अनुमतः—यहाँ पर अनु+मन् से 'क्त' भूतार्थ में हुआ है—'निष्ठा' इस सूत्र से, न कि वर्त्तमान अर्थ में। यदि वर्त्तमान अर्थ में 'क्त' का प्रयोग हुआ होता तब 'पुरोधसः' षष्ठ्यन्त प्रयोग होता—'क्तस्य च वर्त्तमाने' इस सूत्र से; क्योंकि पद्य में 'पुरोधसा' तृतीयान्त है, अतः भूतार्थ में ही यहाँ पर 'क्त' का प्रयोग हुआ है। मतिबुद्धि—आदि सूत्र से जो मन् आदि धातुओं से 'क्त' का प्रयोग वर्त्तमान काल में होता है, वह इन धातुओं से भूतार्थ में 'क्त' का बाधक नहीं होता। मनोरमा में लिखा है—"नच तक्रकौण्डिन्यन्यायेन मत्यादिभ्यः क्तस्य वर्त्तमानकालो भूतकालतां बाधते इति वाच्यम्।"

**हिन्दी**—वह, जिसकी आज्ञा का कभी लंघन नहीं होता, नवागत यौवन से उद्धत दुश्शासन को युवराज बनाकर, स्वयं आलस्य को त्यागकर पुरोहित की आज्ञा से यज्ञों में हवि द्वारा अग्निदेव को प्रसन्न करता है।।२२।।

प्रलीनभूपालमपि स्थिरायति
प्रशासदावारिधि मण्डलं भुवः ।
स चिन्तयत्येव भियस्त्वदेष्यती-
रहो दुरन्ता बलवद्विरोधिता ॥२३॥

**अन्वयः**—सः प्रलीनभूपालं स्थिरायति भुवः मण्डलम् आवारिधि प्रशासत् अपि त्वदेष्यतीः भियः चिन्तयत्येव । अहो बलवद्विरोधिता दुरन्ता ।

**व्याख्या**—स दुर्योधनः प्रलीनभूपालं निस्सपत्नमित्यर्थः । स्थिरायति चिरस्थायीत्यर्थः । भुवो मण्डलमा वारिधिभ्य आवारिधि प्रशासद् आज्ञापयन्नपि त्वत् त्वत्त एष्यतीः आगमिष्यतीः भियो भयहेतून् विपद इत्यर्थः । चिन्तयत्या—लोचयत्येव । स एवाह—अहो बलवद्विरोधिता दुरन्ता दुष्टावसाना । सार्वभौमस्यापि प्रबलैः सह वैरायमाणत्वमनर्थपर्यवसाय्येवेति तात्पर्यम् ।

**वाच्यपरिवर्त्तनम्**—तेन प्रलीनभूपालं स्थिरायति भुवः मण्डलम् आवारिधि प्रशासता अपि त्वदेष्यत्यः भियः चिन्त्यन्ते एव । अहो बलवद्विरोधितया दुरन्तया (भूयते) ।

**व्याकरणम्**—प्रलीनभूपालम्—प्रलीनाः भूपालाः यस्मिन् (बहु०) तत् । स्थिरायति—स्थिरा आयतिः यस्मिन् (बहु०) तत् । आवारिधि—वारिधेः आ (अव्ययीभाव); मर्यादा के अर्थ में 'आङ्' का प्रयोग हुआ है; समुद्रपर्यन्त । त्वदेष्यतीः—त्वत् एष्यतीः । एष्यतीः—इ+लृट् शतृ+ङीप्, आनेवाली; गत्यर्थक इ धातु का 'प्राप्ति' अर्थ भी हो सकता है । मल्लिनाथ 'ऐष्यतीः'=आ+एष्यतीः पाठ को विशेषता देते हैं ।

एष्यतीः । नुम् के आगम से एष्यन्तीः । अथवा—ऐष्यतीः । नुम् के आगम से ऐष्यन्तीः ।

बलवद्विरोधिता—बलमस्ति अस्येति बलवत्, बलवता विरोधिता (तृ० तत्पु० ) ।

दुरन्ता—दुः अन्तः यस्याः (बहु०) सा ।

विशेष—अर्थान्तरन्यास । सामान्य से विशेष का समर्थन किया गया है । यद्यपि वह निष्कंटक, चिरस्थायी समुद्र-पर्यन्त भूभाग का शासन कर रहा है तो भी उसे आपसे भय है । सार्वभौम, चातुरन्त चक्रवर्त्ती नृपति को भी बलवान् शत्रुओं से भय रहता है ।

हिन्दी—वह शत्रु-रहित एवं चिरस्थायी राज्य का समुद्र-पर्यन्त शासन करता हुआ भी आपसे आनेवाले भय की चिन्ता करता ही रहता है । ठीक है कि बलवानों के साथ विरोध करने का परिणाम बुरा होता है ।।२३।।

कथाप्रसङ्गेन जनैरुदाहृता-
दनुस्मृताखण्डलसूनुविक्रमः ।
तवाभिधानाद् व्यथते नताननः
स दुस्सहान्मन्त्रपदादिवोरगः ।।२४।।

अन्वयः—कथाप्रसङ्गेन जनैः उदाहृतात् तवाभिधानात् अनुस्मृताखण्डलसूनुविक्रमः सः दुस्सहात् मन्त्रपदात् अनुस्मृताखण्डलसूनुविक्रमः उरग इव नताननः सन् व्यथते ।

व्याख्या—कथाप्रसङ्गेन गोष्ठीवचनेन जनैः अन्यत्र कथा सङ्गेन विषवैद्येन उदाहृताद् उच्चारितात् तवाभिधानात् नामधेयात् स्मारकाद् हेतोः, अन्यत्र तवाभिधानात् । "नामैकदेशग्रहणे नाममात्रग्रहणम्"

इति न्यायात् तश्च वश्च तवौ तार्क्ष्यवासुकी तयोरभिधानं यस्मिन पदे तस्मात् । यद्वा कथा-प्रसङ्गे इनाश्च ते जनाश्चेत्येकं पदम् । अनुस्मृताखण्डलसूनुविक्रमः स्मृतार्जुनपराक्रमः सुदुस्सहादतिदुस्सहात् मन्त्रपदात् मन्त्रशब्दात् स्मारकाद् हेतोः, आखण्डलसूनुः इन्द्रानुजः । उपेन्द्रो विष्णुरिति यावत् । तस्य विः पक्षी गरुड इत्यर्थः, तस्य क्रमः पादविक्षेपः सोऽनुस्मृतो येन स तथोक्तः, स्मृतगरुडमहिमा, उरग इव नताननः सन् व्यथते दुःखायते ।

वाच्यपरिवर्त्तनम्—कथाप्रसङ्गेन जनैः उदाहृतात् तवाभिधानात् अनुस्मृताखण्डलसूनुविक्रमेण तेन दुरसहात् मन्त्रपदात् अनुस्मृताखण्डलसूनुविक्रमेण उरगेण इव नताननेन सता व्यथ्यते ।

व्याकरणम्—कथाप्रसङ्गेन—कथायाः प्रसङ्गः (ष० तत्पु०) कथाप्रसङ्गः तेन । अथवा 'कथाप्रसङ्गेनजनैः' एक पद है—कथाप्रङ्गेषु इनाः (स० तत्पु०) कथाप्रसङ्गेनाः, कथाप्रसङ्गेनाश्च ते जनाश्च (कर्म०) । अनुस्मृताखण्डलसूनुविक्रमः—आखण्डलस्य सूनुः ( ष० तत्पु० ) आखण्डलसूनुः, आखण्डलसूनोः ( अर्जुनस्य ) विक्रमः (ष० तत्पु०) आखण्डलसूनुविक्रमः; अनुस्मृतः आखण्डलसूनुविक्रमः येन (बहु०) सः । अथवा—आखण्डलसूनोः (विष्णोः) विः (गरुडः) (ष० तत्पु०); तस्य क्रमः ( ष० तत्पु ) अनुस्मृतः आखण्डलसूनुविक्रमः येन (बहु०) सः । तवाभिधानात्—तश्च वश्चेति तवौ (द्वन्द्व) (तः = तार्क्ष्यः, वः = वासुकिः ); तवयोः अभिधानं यस्मिन् (बहु०) तस्मात् । दुस्सहात्—दुःखेन सह्यते इति तत्, तस्मात् । मन्त्रपदात्—मन्त्रस्य पदम् ( ष० तत्पु० ) तस्मात् । नताननः—नतम् आननं यस्य (बहु०) सः ।

विशेष—ज्येष्ठ भ्राता युधिष्ठिर लघु भ्राता अर्जुन के पराक्रम की प्रशंसा कर रहे हैं । मल्लिनाथ ने इसका समर्थन किया है—

सर्वतो जयमन्विच्छेत् पुत्रादिच्छेत् पराजयम् ।

हिन्दी—गोष्ठी-चर्चा में जब लोग आपका नाम लेते हैं तब वह दुर्योधन इन्द्रपुत्र अर्जुन के पराक्रम का संस्मरण करके, सिर झुकाकर सन्तप्त हुआ करता है; जैसे कि विषवैद्य से उच्चारित गरुड और वासुकि के नामयुक्त अतिदुस्सह मन्त्रपद से विष्णुवाहन गरुड की वेगवती गति का स्मरण करके साँप नतमस्तक होकर व्यथित हुआ करता है ॥२४॥

तदाशु कर्त्तुं त्वयि जिह्ममुद्यते
विधीयतां तत्र विधेयमुत्तरम् ।
परप्रणीतानि वचांसि चिन्वतां
प्रवृत्तिसाराः खलु मादृशां गिरः ॥२५।

अन्वयः—तत् त्वयि जिह्मं कर्त्तुम् उद्यते तत्र विधेयम् उत्तरम् आशु विधीयताम् । परप्रणीतानि वचांसि चिन्वतां मादृशां गिरः प्रवृत्तिसाराः खलु ।

व्याख्या—तत् तस्मात् त्वयि जिह्मं कपटं कर्त्तुमुद्यते, त्वां जिघांसावित्यर्थः। तत्र तस्मिन् दुर्योधने विधेयं कर्त्तव्यमुत्तरं प्रतिक्रियाऽऽशु विधीयतां क्रियताम् । ननु कर्त्तव्यमपि त्वयैवोच्यतामिति चेत्तत्राह—परेति । परप्रणीतानि परोक्तानि वचांसि चिन्वतां गवेषयतां मादृशां वार्त्ताहारिणामित्यर्थः गिरः । प्रवृत्तिसारा वार्त्तामात्रसाराः खलु । वार्त्तामात्रवादिनो वयम्, नतु कर्त्तव्यार्थोपदेशसमर्थाः । अतस् त्वयैव निर्धार्य कार्यमिति भावः।

वाच्यपरिवर्त्तनम्—तत् त्वयि, जिह्मं कर्त्तुम् उद्यते तत्र विधेयम् उत्तरम् आशु विधेहि । परप्रणीतानि वचांसि चिन्वतां मादृशां गीर्भिः प्रवृत्तिसाराभिः भूयते खलु ।



व्याकरणम्—विधेयम्—वि + धा + यत् (कर्मणि प्रत्ययः)।

विधीयताम्—वि+धा+लोट् (कर्मणि) प्र० एक०।
परप्रणीतानि—परैः प्रणीतानि ( तृ० तत्पु० )।
चिन्वताम्—चि+शतृ (ष० बहु०)।
प्रवृत्तिसाराः—प्रवृत्तिः सारो यासां (बहु०) ते।
खलु—एव।

**विशेष**—हम केवल गुप्त सूचनाओं के निवेदक हैं। कर्त्तव्य अर्थ के उपदेशक हम नहीं हैं।

अर्थान्तरन्यास अलङ्कार। सामान्य से विशेष का समर्थन किया गया है।

**हिन्दी**—जबकि वह इस प्रकार कपट करने में प्रवृत्त है तब आपको उसकी प्रतिक्रिया शीघ्र करनी चाहिए। परोक्त वचनों का संग्रह करनेवाले मुझ जैसों के वाक्य सूचना-मात्र के प्रयोजक होते हैं।* ॥२५॥

**इतीरयित्वा गिरमात्तसत्क्रिये**
**गतेऽथ पत्यौ वनसन्निवासिनाम्।**
**प्रविश्य कृष्णासदनं महीभुजा**
**तदाचचक्षेऽनुजसन्निधौ वचः ॥२६॥**

**अन्वयः**—वनसन्निवासिनां पत्यौ इति गिरम् ईरयित्वा आत्तसत्क्रिये गते अथ महीभुजा कृष्णासदनं प्रविश्य अनुजसन्निधौ तद्वचः आचचक्षे।

**व्याख्या**—वनसन्निवासिनां पत्यौ वनेचराधिपे इति गिरम् ईरयित्वोक्त्वाऽऽत्तसत्क्रिये गृहीतपारितोषिके गते सति अथ महीभुजा राज्ञा कृष्णासदनं द्रौपदीभवनं प्रविश्य अनुजसन्निधौ तद्वनेचरोक्तं वचो

* अर्थात् कर्त्तव्य अर्थ का उपदेश देना हमारा लक्ष्य नहीं होता। हमारा कर्त्तव्य केवल सूचना देना है।

वाक्यमाचचक्षे आख्यातम्। अथवा कृष्णेति पदच्छेदः। सदनं प्रविश्यानुजसन्निधौ तद्वचः कृष्णाऽऽचचक्षे आख्याता।

वाच्यपरिवर्त्तनम्—वनसन्निवासिनां पत्यौ इति गिरम् ईरयित्वा आत्तसत्क्रिये गते अथ महीभुक् कृष्णासदनं प्रविश्य अनुजसन्निधौ तद्वचः आचचक्षे।

अथवा

...अथ महीभुक् सदनं प्रविश्य अनुजसन्निधौ कृष्णां तद्वचः आचचक्षे।

व्याकरणम्—वनसन्निवासिनाम्—वने सन्निवसन्तीति (उपपद तत्पु०) ते, तेषाम्। आत्तसत्क्रिये—आत्ता सत्क्रिया येन (बहु०) स आत्तसत्क्रियः, तस्मिन्। कृष्णासदनम्—कृष्णायाः सदनम् (ष० तत्पु०)

अथवा 'कृष्णा' 'सदनम्'—ये दो अलग-अलग पद हैं। आचचक्षे —आ+चक्ष्+लिट् आत्मने (कर्मणि)।

विशेष—अथ मंगलसूचक अव्यय है। युधिष्ठिर के भावी विजयमङ्गल का द्योतक है।

हिन्दी—इस प्रकार सन्देश देकर तथा सम्मान पाकर वनचरराज के चले जाने पर महाराज युधिष्ठिर द्रौपदी के कुटीर को गये और वहाँ भाइयों के समक्ष द्रौपदी से पूरा वृत्तान्त कह सुनाया ॥२६॥

निशम्य सिद्धिं द्विषतामपाकृती-
स्ततस्ततस्त्या विनियन्तुमक्षमा।
नृपस्य मन्युव्यवसायदीपिनी—
रुदाजहार द्रुपदात्मजा गिरः ॥२७॥

**अन्वयः**—द्रुपदात्मजा द्विषतां सिद्धिं निशम्य ततः ततस्त्याः अपाकृतीः विनियन्तुम् अक्षमा नृपस्य मन्युव्यवसायदीपिनीः गिरः उदाजहार।

**व्याख्या**—अथ द्रुपदात्मजा द्रौपदी द्विषतां सिद्धिं वृद्धिरूपां निशम्य ततस्तदनन्तरम्। ततो द्विषद्भ्य आगताः ततस्त्याः अपाकृतीः विकारान् विनियन्तुं निरोद्धुम् अक्षमा सती नृपस्य युधिष्ठिरस्य मन्युव्यवसाययोः क्रोधोद्योगयोर्दीपनीः संवर्धिनीः गिरः वाक्यानि उदाजहार जगादेत्यर्थः।

**वाच्यपरिवर्त्तनम्**—द्रुपदात्मजया द्विषतां सिद्धिं निशम्य ततः ततस्त्याः अपाकृतीः विनियन्तुम् अक्षमया नृपस्य मन्युव्यवसायदीपिन्यः गिरः उदाजह्रिरे।

**व्याकरणम्**—द्रुपदात्मजा—द्रुपदस्य आत्मजा ( ष० तत्पु० )। ततस्त्या—ततः + त्यप्, अव्ययात् त्यप्। द्विषताम्—द्विषन्तीति, द्विष् + शतृ। अपाकृतीः—अप + आ + कृ + क्तिन् + ङीप्, द्वितीया बहु०। विनियन्तुम्—वि + नि + यम् + तुमुन्। अक्षमा—न क्षमा (नञ् तत्पु०)। मन्युव्यवसायदीपिनीः—मन्युश्च व्यवसायश्चेति मन्युव्यवसायौ (द्वन्द्व); मन्युव्यवसाययोः दीपिन्यः ( ष० तत्पु० ) इति ताः। उदाजहार—उद् आ + हृ लिट्। बोली।

**विशेष**—उदाजहार—हृ धातु का अर्थ 'चुराना' है; 'उद् + आ' उपसर्ग जोड़ने से इसका अर्थ 'बोलना' हो जाता है। उपसर्ग जोड़ने से धातु का अर्थ बदल जाता है। इस सम्बन्ध में एक कारिका है—

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।
प्रहाराहारसंहारविहारपरिहारवत्॥

**हिन्दी**—द्रौपदी शत्रुओं की सफलता-रूपी प्रशंसा को सुनकर उनके द्वारा किये गये अपकारों के रोकने में अपने को असमर्थ पाकर क्रोध और उद्योग के दीपक वाक्य युधिष्ठिर से कहने लगी॥२७॥

भवादृशेषु प्रमदाजनोदितं
भवत्यधिक्षेप इवानुशासनम् ।
तथापि वक्तुं व्यवसाययन्ति मां
निरस्तनारीसमया दुराधयः ॥२८॥

अन्वयः—भवादृशेषु प्रमदाजनोदितम् अनुशासनम् अधिक्षेपः इव भवति । तथापि निरस्तनारीसमयाः दुराधयः मां वक्तुं व्यवसाययन्ति।

व्याख्या—भवादृशो भवद्विधाः पण्डिता इत्यर्थः । तेषु विषये प्रमदाजनोचितं स्त्रीजनोक्तम् । अनुशासनं नियोगवचनम् अधिक्षेपस्तिरस्कार इव भवति अतो न युक्तं वक्तुमित्यर्थः । तथाऽपि वक्तुम् अनुचितत्वेऽपि निरस्तनारीसमयाः त्याजितशालीनतारूपस्त्रीसमाचाराः दुराधयः समयोल्लङ्घन—हेतुत्वाद् दुष्टा मनोव्यथाः मां वक्तुं व्यवसाययन्ति प्रेरयन्ति । न किञ्चिदयुक्तं दुःखिनामिति भावः ।

वाच्यपरिवर्त्तनम्—भवादृशेषु प्रमदाजनोदितेन अनुशासनेन अधिक्षेपेण इव भूयते । तथापि निरस्तनारीसमयैः दुराधिभिः अहं वक्तुं व्यवसाय्ये ।

व्याकरणम्—प्रमदाजनोचितम्—प्रमदा चासौ जनश्चेति प्रमदाजनः (कर्म०), प्रमदाजनेन उदितम् (तृ० तत्पु०) । निरस्तनारीसमयाः—नारीणां समयाः (ष० तत्पु०), निरस्ताः नारीणां समयाः यैः (बहु० ) ते । समय—शालीनतादिधर्म ।

दुराधयः—दुष्टः आधिः=दुराधिः (प्रादितत्पु०) ते ।

व्यवसाययन्ति—वि + अव + सो + णिच् , लट् , प्र० बहु० ।

विशेष—मल्लिनाथ ने इसका तात्पर्यार्थ इस प्रकार कहा है—'न किञ्चिदयुक्तं दुःखितानाम् ।' दुःखी जन यदि अयुक्त भी कहे तो वह अयुक्त नहीं होता ।

हिन्दी—आप-जैसे व्यक्ति के सम्बन्ध में स्त्री-जाति का आदेश-वाक्य निन्दा के सदृश होता है। तो भी मेरी प्रबल मानसिक वेदनाएँ, जिन्होंने मुझसे स्त्रीजनोचित शालीनता को छुड़ाया है, मुझे कहने के लिए प्रेरित करती हैं ॥२८॥

अखण्डमाखण्डलतुल्यधामभि-
श्चिरं धृता भूपतिभिः स्ववंशजैः ।
त्वयाऽऽत्महस्तेन मही मदच्युता
मतङ्गजेन स्रगिवापवर्जिता ॥२९॥

अन्वयः—आखण्डलतुल्यधामभिः स्ववंशजैः भूपतिभिः चिरम् अखण्डं धृता मही त्वया मदच्युता मतङ्गजेन स्रग् इव आत्महस्तेन अपवर्जिता ।

व्याख्या—आखण्डलतुल्यधामभिः इन्द्रतुल्यप्रभावैः स्ववंशजैः भूपतिभिः भरतादिभिः चिरम् अखण्डम् अविच्छिन्नं धृता मही त्वया मदं च्योततीति मदच्युत् तेन मदस्राविणा मतङ्गजेन स्रगिव आत्महस्तेन स्वकरेण स्वचापलेनेत्यर्थः । अपवर्जिता परिहृता त्यक्ता । स्वदोषादेवाय-मनर्थागम इत्यर्थः ।

वाच्यपरिवर्त्तनम्—आखण्डलतुल्यधामभिः स्ववंशजैः भूपतिभिः चिरम् अखण्डं धृतां महीं त्वं मदच्युत् मतङ्गजः स्रजम् इव आत्महस्तेन अपवर्जितवान् ।

व्याकरणम्—आखण्डलतुल्यधामभिः—आखण्डलेन तुल्यं धाम येषां ( बहु० ) ते आखण्डलतुल्यधामानः तैः। स्ववंशजैः—स्वस्य वंशः स्ववंशः, स्ववंशे जाताः इति स्ववंशजाः तैः (उपपदतत्पु०)। अखण्डम्—न खण्डः अखण्डः, अखण्डं यथा स्यात् तथा। मदच्युता—मदं च्योत-तीति मदच्युत् ( उपपदतत्पु० ) तेन। मतङ्गजेन—मतङ्गात् जाता इति

मतङ्गजः तेन। आत्महस्तेन—आत्मनः हस्तः (ष० तत्पु०) आत्महस्तः, तेन।

**विशेष**—मल्लिनाथ के अनुसार इसका तात्पर्यार्थ इस प्रकार है—'स्वदोषादेवायमनर्थागमः।' अर्थात् आपने अपने हाथों अपना बुरा किया है।

**हिन्दी**—इन्द्र के सदृश तेजस्वी आपके वंशज राजाओं ने जिस पृथ्वी का चिरकाल तक सतत उपभोग किया था, उसे आप अपने हाथों खो बैठे जैसे एक मदस्रावी हाथी अपनी सूँड़ से पुष्पमाला को खो बैठता है ॥२६॥

व्रजन्ति ते मूढधियः पराभवं
भवन्ति मायाविषु ये न मायिनः।
प्रविश्य हि घ्नन्ति शठास्तथाविधा-
नसंवृताङ्गान्निशिता इवेषवः ॥३०॥

**अन्वयः**—मूढधियः ते पराभवं व्रजन्ति ये मायाविषु मायिनः न भवन्ति। शठाः तथाविधान् असंवृताङ्गान् निशिताः इषवः इव प्रविश्य घ्नन्ति हि।

**व्याख्या**—मूढधियो निर्विवेकबुद्धयस्ते पराभवं व्रजन्ति ये मायाविषु मायावत्सु विषये मायिनो मायावन्तः न भवन्ति। शठा अपकारिणो धूर्त्ताः तथाविधान् अकुटिलान् असंवृताङ्गान् अवर्मितशरीरान् निशिता इषव इव प्रविश्य प्रवेशं कृत्वाऽऽत्मीया भूत्वा घ्नन्ति हि। आर्जवं हि कुटिलेषु न नीतिरिति भावः।

**वाच्यपरिवर्त्तनम्**—मूढधीभिः तैः पराभवः व्रज्यते यैः मायाविषु मायिभिः न भूयते। शठैः तथाविधाः असंवृताङ्गाः निशितैः इषुभिः इव प्रविश्य हन्यन्ते हि।

**व्याकरणम्**—मूढधियः—मूढा धीः येषाम् (बहु०) ते।

**वाच्यपरिवर्त्तनम्**—अनुरक्तसाधनेन कुलाभिमानिना त्वदन्येन केन इव नराधिपेन गुणानुरक्ता कुलजा मनोरमा श्रीः आत्मवधूः इव परैः अपहार्यते ?

**व्याकरणम्**—अनुरक्तसाधनः—अनुरक्तानि साधनानि यस्य (बहु॰) सः। कुलाभिमानी—कुलस्य अभिमानः अस्ति यस्य (बहु॰) सः। त्वदन्यः—त्वत् अन्यः।

नराधिपः—नराणाम् अधिपः—(ष॰ तत्पु॰) गुणानुरक्ताम्—गुणैः अनुरक्ता (तृ॰ तत्पु॰) ताम्।

कुलजाम्—कुलात्, कुले वा जाता इति ताम्।

आत्मवधूम्—आत्मनः वधूः (ष॰ तत्पु॰) आत्मवधूः, ताम्।

अपहारयेत्—अप+हृ+णिच् विधिलिङ्, प्र॰ एक॰।

**विशेष**—जैसे पत्नी का अपहरण मानहानि का कारण होता है, वैसे ही राजलक्ष्मी का अपहरण भी मानहानि का कारण होता है। 'कलत्रापहारवत् लक्ष्म्यापहारोऽपि राज्ञः मानहानिकरत्वाद् अनुपेक्षणीयः।'

**हिन्दी**—इस भूतल पर तुम्हारे सिवा अन्य कौन ऐसा राजा है, जो उच्च कुल का अभिमान रखता हुआ अनुकूल साधनों के रहते हुए भी सन्धि, विग्रह, यान, आसन आदि षड्गुणों के यथोचित प्रयोग से आकृष्ट कुल क्रमागत राजलक्ष्मी को सौन्दर्यादि गुणों से अनुरक्त कुलीन एवं सुन्दरी पत्नी की भाँति अपहृत होने देगा ? ॥३१॥

भवन्तमेतर्हि मनस्विगर्हिते
विवर्तमानं नरदेव वर्त्मनि।
कथं न मन्युर्ज्वलयत्युदीरितः
शमीतरुं शुष्कमिवाग्निरुच्छिखः ॥३२॥

**अन्वयः**—नरदेव ! एतर्हि मनस्विगर्हिते वर्त्मनि विवर्त्तमानं भवन्तम् उदीरितः मन्युः शुष्कं शमीतरुम् उच्छिखः अग्निः इव कथं न ज्वलयति ?

**व्याख्या**—नरदेव हे नरेन्द्र एतर्हीदानीम्, अस्मिन् आपत्कालेऽपीत्यर्थः। मनस्विगर्हिते शूरजनजुगुप्सिते वर्त्मनि मार्गे विवर्त्तमानं शत्रुकृतां दुर्दशामनुभवन्तमित्यर्थः। भवन्तं त्वाम् उदीरित उद्दीपितो मन्युः क्रोधः शुष्कं नीरसम्, शमी चासौ तरुश्चेति तम्, उच्छिखः उद्गतज्वालः वह्निरिव कथं न ज्वलयति, ज्वलयितुमुचितमित्यर्थः।

**वाच्यपरिवर्त्तनम्**—नरदेव ! एतर्हि मनस्विगर्हिते वर्त्मनि विवर्त्तमानः भवान् उदीरितेन मन्युना शुष्कः शमीतरुः उच्छिखः अग्निः इव कथं न ज्वल्यते ?

**व्याकरणम्**—नरदेव—नराणां देवः (निर्धारणे) (ष० तत्पु०) अथवा नरेषु देवः (स० तत्पु०) तत्सम्बुद्धौ।

एतर्हि—इदम् + र्हिल्। इदम् को एत आदेश होता है।

मनस्विगर्हिते—मनस्विभिः गर्हितः (तृ० तत्पु०) तस्मिन्।

विवर्त्तमानम्—वि + वृत् + शानच्।

उदीरितः—उद् ईर् + णिच् + क्त।

शमीतरुम्—शमी चासौ तरुश्चेति (कर्म०) तम्।

उच्छिखः—उद्गता शिखा यस्य (बहु०) सः।

**विशेष**—इस पद्य से लेकर दस पद्यों में युधिष्ठिर के कोपानल को प्रदीप्त करने का प्रयास किया गया है।

'अथ दशभिः कोपोद्दीपनं करोति।'—मल्लिनाथ

**हिन्दी**—हे नरेन्द्र ! अब वीर पुरुषों से निन्दित मार्ग पर चलते हुए आपको स्वयं का प्रबल कोप क्योंकर नहीं जलाता, जैसे कि नीरस शमी वृक्ष को ज्वालायुक्त प्रचण्ड अग्नि जला देती है ? ॥३२॥

अवन्ध्यकोपस्य विहन्तुरापदां
भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना
न जातहार्देन न विद्विषादरः ॥३३॥

**अन्वयः**—अवन्ध्यकोपस्य आपदां विहन्तुः देहिनः ( जन्तवः ) स्वयमेव वश्याः भवन्ति । अमर्षशून्येन जन्तुना जातहार्देन जनस्य आदरः न, विद्विषा ( च आदरः न ) ।

**व्याख्या**—अवन्ध्यः कोपो यस्य तस्यावन्ध्यकोपस्य अतएव आपदां विहन्तुर्निग्रहानुग्रहसमर्थस्येत्यर्थः, पुंस इति शेषः । देहिनो जन्तवः स्वयमेव वश्या वशंगता भवन्ति । अतस्त्वया कोपिना भवितव्यमित्यर्थः । व्यतिरेके त्वनिष्टमाचष्टे—अमर्षशून्येन निष्कोपेन जन्तुना जातहार्देन जातस्नेहेन सता जनस्यादरो न, विद्विषा द्विषता च सताऽऽदरो न । अमर्षहीनस्य रागद्वेषावकिञ्चित्करत्वादगण्यावित्यर्थः । अथवा विद्विषा दरो भयं न ।

**वाच्यपरिवर्त्तनम्**—अवन्ध्यकोपस्य आपदां विहन्तुः देहिभिः ( जन्तुभिः ) स्वयमेव वश्यैः भूयते । अमर्षशून्येन जन्तुना जातहार्देन जनस्य आदरेण न ( भूयते ) । विद्विषा ( च आदरेण न भूयते, अथवा दरेण न भूयते ) ।

**व्याकरणम्**—अवन्ध्यकोपस्य—अवन्ध्यः कोपो यस्य ( बहु० ) सः अवन्ध्यकोपः तस्य । अमर्षशून्येन—अमर्षेण शून्यः ( तृ० तत्पु० ) अमर्षशून्यः, तेन । जातहार्देन—जातं हार्दं यस्य ( बहु० ) स जातहार्दः, तेन ।

**विशेष**—जिसका कोप व्यर्थ नहीं जाता, उस निग्रहानुग्रह में समर्थ व्यक्ति के सभी प्राणी वशगत हो जाते हैं । कोपहीन पुरुष की

शत्रुता से कोई भय नहीं लगता और न उसके स्नेह से कुछ लाभ होता है। 'अमर्षहीनस्य रागद्वेषौ अकिञ्चित्करत्वाद् अगण्यौ इत्यर्थः।'—मल्लिनाथ।

हिन्दी—जिसका कोप विफल नहीं जाता और जो विपदाओं के उन्मूलन में समर्थ है, उस व्यक्ति के वश में सभी लोग आ जाते हैं। क्रोध-रहित व्यक्ति के मित्र होने पर भी कोई लाभ नहीं, शत्रु होने पर भी कोई हानि या भय नहीं ॥३३॥

परिभ्रमँल्लोहितचन्दनोचितः
पदातिरन्तर्गिरि रेणुरूषितः।
महारथः सत्यधनस्य मानसं
दुनोति नो कच्चिदयं वृकोदरः ॥३४॥

अन्वयः—लोहितचन्दनोचितः महारथः रेणुरूषितः पदातिः अन्तर्गिरि परिभ्रमन् अयं वृकोदरः सत्यधनस्य (तव) मानसं नो दुनोति कच्चित्?

व्याख्या—लोहितचन्दनोचितः उचितलोहितचन्दनः, अभ्यस्त-रक्तचन्दन इत्यर्थः। महारथो रथचारी। उभयत्रापि प्रागिति शेषः। अद्य तु रेणुरूषितो धूलिच्छुरितः पादाभ्यामतति गच्छतीति पदातिः पाद-चारी अन्तर्गिरि गिरिष्वन्तः परिभ्रमन्नयं वृकोदरो भीमः सत्यधनस्य तव मानसं नो दुनोति कच्चित्? न परितापयति किम्?

वाच्यपरिवर्त्तनम्—लोहितचन्दनोचितेन महारथेन रेणुरूषितेन पदातिना अन्तर्गिरि परिभ्रमता अनेन वृकोदरेण सत्यधनेन (तव) मानसं न दूयते कच्चित्?

व्याकरणम्—लोहितचन्दनोचितः—लोहितं चन्दनम् लोहित-चन्दनम् (कर्म०), उचितं लोहितचन्दनम् अस्येति उचितलोहित-

चन्दनः। यहाँ पर 'वाहिताग्न्यादिषु' इस सूत्र से 'उचित' (निष्ठान्त) शब्द का विकल्प से पूर्वनिपात होगा; अतः दोनों रूप मिलेंगे – (१) उचितलोहितचन्दनः, (२) लोहितचन्दनोचितः।

महारथः—महान् रथो यस्य (बहु०) सः।

रेणुरूषितः—रेणुभिः रूषितः (तृ० तत्पु०);

अन्तर्गिरि—गिरिषु। विभक्त्यर्थे अव्ययीभावः—'अव्ययं विभक्ति' —इत्यादिना।

वृकोदरः—वृकस्य उदरं वृकोदरम्; वृकोदरमिव उदरमस्येति वृकोदरः।

सत्यधनस्य—सत्यमेव धनं यस्य सः सत्यधनः (बहु०) तस्य।

दुनोति—दु (५म गण) लट् प्र० एक०।

**विशेष**—सत्यधनस्य—व्यंग्यपूर्ण वचन है। अब भी आप सत्य की ही रक्षा कर रहे हो, भाइयों की नहीं।

**हिन्दी**—यह भीम जो पहले रक्तचन्दन से अपना अङ्गलेप करते थे, रथ पर चढ़कर घूमते थे; अब वही धूल से मलिन होकर पैदल पर्वतों पर घूमते हुए क्या सत्य के पुजारी आपके मन को सन्तप्त करते नहीं? ॥३४॥

विजित्य यः प्राज्यमयच्छदुत्तरा-
न्कुरूनकुप्यं वसु वासवोपमः।
स वल्कवासांसि तवाधुनाऽऽहरन्
करोति मन्युं न कथं धनञ्जयः ॥३५॥

**अन्वयः**—वासवोपमः यः धनञ्जयः उत्तरान् कुरून् विजित्य प्राज्यम् अकुप्यं वसु अयच्छत् स धनञ्जयः अधुना तव वल्कवासांसि आहरन् कथं तव मन्युं न करोति?

**व्याख्या**—वासव इन्द्र उपमा उपमानं यस्य स वासवोपमः इन्द्रतुल्यो यो धनञ्जयः उत्तरान् कुरून् मेरोरुत्तरान् मानुषान् देशविशेषान् विजित्य प्राज्यं प्रभूतम्। कुप्यादन्यदकुप्यं हेमरूप्यात्मकं वसु धनम् अयच्छद् दत्तवान्। स धनं जयतीति धनञ्जयोऽर्जुनः अधुनाऽस्मिन् काले तव वल्कवासांस्याहरन् कथं मन्युं क्रोधं दुःखं वा न करोति ?

**वाच्यपरिवर्त्तनम्**—वासवोपमेन येन धनञ्जयेन उत्तरान् कुरून् विजित्य प्राज्यम् अकुप्यं वसु अदीयत तेन धनञ्जयेन अधुना तव वल्कवासांसि आहरता कथं तव मन्युः न क्रियते ?

**व्याकरणम्**—वासवोपमः—वासवः उपमा यस्य (बहु०) सः। धनञ्जयः—धनं जयतीति (उपपदतत्पु०) सः। उत्तरान् कुरून्—मेरोरुत्तरान् देशविशेषान्—मल्लिनाथ।

प्राज्यम्—प्रकर्षेण अज्यते (काम्यते) इति (प्रादि०) तत्।

अकुप्यम्—गुप्यते रक्ष्यते इति अगुप्यम्=अकुप्यम् निपातन से गकार को ककारादेश हुआ है।

वल्कवासांसि—वल्कान्येव वासांसि (कर्म०)।

**विशेष**—अकुप्यम्—सोना, चाँदी आदि धन। "अकुप्यं हेमरूप्यात्मकम्।" —मल्लिनाथ।

**हिन्दी**—इन्द्र के सदृश पराक्रमशाली जिस अर्जुन ने मेरु गिरि के उत्तरवर्त्ती कुरुदेशों को जीतकर आपको प्रचुर सुवर्ण-रजतात्मक धनराशि लाकर समर्पित की थी, आज वह अर्जुन वल्कल-वस्त्र लाकर समर्पित करते हुए आपके क्रोध को कैसे जाग्रत नहीं करते ? ॥३५॥

वनान्तशय्याकठिनीकृताकृती
कचाचितौ विष्वगिवागजौ गजौ ।
कथं त्वमेतौ धृतिसंयमौ यमौ
विलोकयन्नुत्सहसे न बाधितुम् ॥३६॥

अन्वयः—वनान्तशय्याकठिनीकृताकृती विष्वक् कचाचितौ अगजौ गजौ इव एतौ यमौ विलोकयन् त्वं कथं धृतिसंयमौ बाधितुं न उत्सहसे ?

व्याख्या—वनान्तो वनभूमिरेव शय्या तया कठिनीकृताकृती कठिनीकृतदेहौ विष्वक् समन्तात् कचाचितौ कचव्याप्तौ विकीर्णकेशावित्यर्थः। अतएव अगजौ गिरिसम्भवौ गजाविव स्थितावेतौ यमौ युग्मजातौ माद्रीपुत्रावित्यर्थः। विलोकयंस्त्वं कथं धृतिसंयमौ सन्तोषनियमौ बाधितुं न उत्सहसे न प्रवर्त्तसे ! अहो ते महद् धैर्यमिति भावः।

वाच्यपरिवर्त्तनम्—वनान्तशय्याकठिनीकृताकृती विष्वक् कचाचितौ अगजौ गजौ इव एतौ यमौ विलोकयता त्वया कथं धृतिसंयमौ बाधितुं न उत्सह्यते ?

व्याकरणम्—वनान्तशय्याकठिनीकृताकृती—वनस्य अन्तः (ष० तत्पु०) वनान्तः; वनान्त एव शय्या (कर्म०) इति वनान्तशय्या; अकठिना कठिना कृता इति कठिनीकृता (अभूततद्भावे च्विः); वनान्तशय्यया कठिनीकृता आकृतिः ययोः (बहु०) तौ। कचाचितौ—कचैः (=केशैः) आचितौ (तृ० तत्पु०)। अगजौ—अगे (पर्वते) जातौ। धृतिसंयमौ—धृतिश्च संयमश्चेति (द्वन्द्व) तौ।

विशेष—विष्वक—समन्तात्। अव्यय है।

विशेष—विष्वक्—समन्तात्। अव्यय है। अगजौ—न गच्छतीति अगः (पर्वतः); अगे (पर्वते) जातौ। अग=नग। यमौ=सहजातौ।

मल्लिनाथ ने इस पद्य का भाव इस प्रकार कहा है—"अहो ते महद् धैर्यम्"। यह व्यंग्य वाक्य है। आपका यह धैर्य कैसे उचित माना जा सकता है?

हिन्दी—वनस्थली पर शयन से जिनका शरीर कठिन हो गया है, जिनके केश इधर-उधर बिखरे हुए हैं, पर्वतीय गजों के सदृश महान् आकारवाले इन दोनों सहजात नकुल और सहदेव को देखकर क्या आप धैर्य और संयम को त्यागने के लिए तैयार नहीं हैं?॥३६॥

इमामहं वेद न तावकीं धियं
विचित्ररूपाः खलु चित्तवृत्तयः।
विचिन्तयन्त्या भवदापदं परां
रुजन्ति चेतः प्रसभं ममाधयः॥३७॥

अन्वयः—इमां तावकीं धियम् अहं न वेद। चित्तवृत्तयः विचित्ररूपाः खलु। परां भवदापदं विचिन्तयन्त्याः मम चेतः आधयः प्रसभं रुजन्ति।

व्याख्या—इमां वर्त्तमानां तवेमां तावकीं त्वदीयाम्। धियं त्वदापद्विषयां चित्तवृत्तिमहं न वेद कीदृशी वा न वेद्मि। परबुद्धेरप्रत्यक्षत्वादिति भावः। चित्तवृत्तयो विचित्ररूपा धीराधीराद्यनेक प्रकाराः खलु। किन्तु परामुत्कृष्टां भवदापदं विचिन्तयन्त्या भावयन्त्या मम चेतश्चित्तम् आधयो मनोव्यथाः प्रसभं प्रसह्य रुजन्ति भञ्जन्ति। पश्यतामपि दुस्सहा दुःखजननी त्वद्विपत्तिरनुभवितारं त्वां न विकरोतीति महच्चित्रमित्यर्थः।

**वाच्यपरिवर्त्तनम्**—इयं तावकी धीः मया न विद्यते। चित्तवृत्तिभिः विविधरूपाभिः खलु (भूयते)। परां भवदापदं विचिन्तयन्त्याः मम चेतः आधिभिः प्रसभं रुज्यते।

**व्याकरणम्**—तावकीम्—युष्मद् + अण् + ङीप्, द्वती० एक०। युष्मद् के स्थान में "तवक' आदेश होता है। 'तवकममकावेकवचने।' चित्तवृत्तयः—चित्तस्य वृत्तिः (ष० तत्पु०) चित्तवृत्तिः, ताः। विचित्ररूपाः—विशेषेण चित्राः विचित्राः (प्रादि तत्पु०); विचित्रा + रूपप्; प्रशंसा के अर्थ में रूपप् प्रत्यय हुआ है। पुंवद्भाव से 'विचित्र' बना।

**विशेष**—'चित्तवृत्तयः विचित्ररूपाः।' इसका समानार्थक वाक्य—'भिन्नरुचिर्हि लोकः।'

**हिन्दी**—आपके ये शान्ति-विचार मेरी समझ में नहीं आते। निश्चित ही लोगों की विचारधाराएँ विलक्षण होती हैं। आपकी इन घोर आपत्तियों को देखकर मानसी व्यथाएँ मेरे मन पर प्रबल आघात पहुँचाती हैं ॥३७॥

**पुराधिरूढः शयनं महाधनं**
**विबोध्यसे यः स्तुतिगीतिमङ्गलैः।**
**अदभ्रदर्भामधिशय्य स स्थलीं**
**जहासि निद्रामशिवैः शिवारुतैः ॥३८॥**

**अन्वयः**—यः महाधनं शयनम् अधिरूढः स्तुतिगीतिमङ्गलैः विबोध्यसे सः (त्वम्) अदभ्रदर्भां स्थलीम् अधिशय्य अशिवैः शिवारुतैः निद्रां जहासि।

**व्याख्या**—यः त्वं महाधनं बहुमूल्यं श्रेष्ठं शयनं शय्यामधिरूढः सन् स्तुतयो गीतयश्च ता एव मङ्गलानि तैः करणभूतैः पुरा

विबोध्यसे वैतालिकैरितिशेषः। पूर्वं बोधित इत्यर्थः। स त्वम् अदभ्रदर्भां बहुकुशाम् अधिशय्य शयित्वा अशिवैः अमङ्गलैः शिवारुतैः क्रोष्टुवासितैः निद्रां जहासि। अद्येति शेषः।

**वाच्यपरिवर्त्तनम्**—यं महाधनं शयनम् अधिरूढं स्तुतिगीतिमङ्गलैः (चारणाः) विबोधयन्ति तेन (त्वया) अदभ्रदर्भां स्थलीम् अधिशय्य अशिवैः शिवारुतैः निद्रा हीयते।

**व्याकरणम्**—महाधनम्—महत् धनं यस्य (बहु०) तत्। शयनम्—शय्यतेऽस्मिन्निति अधिकरणे ल्युट्। अधिरूढः—अधि+रुह्+क्त। स्तुतिगीतिमङ्गलैः--स्तुतयश्च गीतयश्चेति (द्वन्द्व) स्तुतिगीतयः, स्तुतिगीतय एव मङ्गलानि (कर्मधारय) तैः। विबोध्यसे—वि+बुध्+णिच् (कर्मणि) म० एक०। अदभ्रदर्भाम्—अदभ्राः दर्भाः यस्याम् (बहु०)। अधिशय्य—अधि+शी+क्त्वा (=ल्यप्)। अशिवैः—न शिवानि=अशिवानि तैः। शिवारुतैः—शिवायाः रुतम् (ष० तत्पु०); शिवानां रुतानि=शिवारुतानि, तैः।

जहासि—हा—वर्त्तमानकाल, म० एक०।

**विशेष**—विभिन्न दशाओं के वर्णन द्वारा युधिष्ठिर को युद्ध के लिए उत्तेजित किया है।

**हिन्दी**—बहुमूल्य शय्या पर सोये हुए आप पहले स्तुति और गीत के मंगल-पाठ से निद्रा का त्याग करते थे, अब आप बहुकुशा भूमि पर शयन करते हुए शृगालियों के अमंगलमय शब्दों से नींद का त्याग करते हैं ॥३८॥

पुरोपनीतं नृप! रामणीयकं
द्विजातिशेषेण यदेतदन्धसा।
तदद्यते वन्यफलाशिनः परं
परैति कार्श्यं यशसा समं वपुः ॥३९॥

**अन्वयः**—नृप ! यदेतत् वपुः पुरा द्विजातिशेषेण अन्धसा रामणीयकम् उपनीतम् अद्य वन्यफलाशिनः ते तद् वपुः यशसा समं परं कार्श्यं परैति।

**व्याख्या**—हे नृप ! यदेतत् पुरोवर्ति वपुः पुरा द्विजातिशेषेण द्विजभुक्तावशिष्टेनान्धसाऽन्नेन रमणीयस्य भावो रामणीयकं मनोहरत्वम् उपनीतं प्रापितम्। अद्य वन्यफलाशिनः ते तव तद् वपुः यशसा समं परम् अतिमात्रं कार्श्यं परैति प्राप्नोति। उभयमपि क्षीयत इत्यर्थः।

**वाच्यपरिवर्त्तनम्**—नृप ! यदेतत् वपुः पुरा द्विजातिशेषम् अन्धः रामणीयकम् उपनीतवत् अद्य वन्यफलाशिनः ते तेन वपुषा यशसा समं परं कार्श्यं परेयते।

**व्याकरणम्**—द्विजातिशेषेण—द्वे जाती येषां (बहु०) ते द्विजातयः, द्विजातीनां शेषः (ष० तत्पु०) द्विजातिशेषः तेन। अन्धस्—अन्न। अन्धसा=अन्नेन, अन्न के द्वारा। रामणीयकम्—रम् + णिच् + अनीय = रमणीय; रमणीयस्य भावः—रमणीय + वुञ् = 'युवोरनाकौ' इससे 'वु' को 'अक', 'अतो लोपः', रामणीयकम्। वन्यफलाशिनः—वने भवं वन्यम्, वन्यं फलं वन्यफलम् (कर्म०), वन्यफलम् अश्नातीति वन्यफलाशी (उपपद तत्पु०) तस्य।

कार्श्यम्—कृशस्य भावः कार्श्यम्; कृश् + ष्यञ्।

परैति—परा + इ लट्, प्र० एक०।

**विशेष**—यहाँ पर शरीर की रमणीयता का शरीर की कृशता से वैषम्य प्रदर्शित किया है।

सहोक्ति अलङ्कार। शरीर यश के साथ क्षीण होता जा रहा है। "सा सहोक्तिः सहार्थस्य बलोदकं द्विवाचकम्।"

द्विजातिशेषेण—ब्राह्मण, क्षत्रिय और वैश्य—ये द्विजाति कहलाते

हैं। संस्कारों से दूसरा जन्म होता है। 'जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते।'

हिन्दी—राजन्! जो पहले ब्राह्मणों के भोजन कर लेने के उपरान्त बचे हुए अन्न से सौन्दर्य को पाया था, आज वन्य फलों के आहार पर निर्भर आपका वह शरीर यश के साथ अत्यन्त क्षीण हो रहा है ॥३९॥

अनारतं यौ मणिपीठशायिना—
वरञ्जयद्राजशिरःस्रजां रजः।
निषीदतस्तौ चरणौ वनेषु ते
मृगद्विजालूनशिखेषु बर्हिषाम् ॥ ४० ॥

अन्वयः—अनारतं मणिपीठशायिनौ यौ राजशिरःस्रजां रजः अरञ्जयत् तौ चरणौ मृगद्विजालूनशिखेषु बर्हिषां वनेषु निषीदतः।

व्याख्या— अनारतम् अजस्रं मणिपीठशायिनौ मणिमय—पादपीठशायिनौ यौ चरणौ राजशिरःस्रजां रजः अरञ्जयत् तौ ते चरणौ मृगैः द्विजैश्च तपस्विभिः आलूनशिखाग्रेषु छिन्नाग्रेषु बर्हिषां कुशानां वनेषु निषीदतः तिष्ठतः।

वाच्यपरिवर्त्तनम्— अनारतं मणिपीठशायिनौ यौ राजशिरःस्रजां रजसा अरज्येताम्, ताभ्यां चरणाभ्यां मृगद्विजालूनशिखेषु बर्हिषां वनेषु निषद्यते।

व्याकरणम्— मणिपीठशायिनौ— मणिनिर्मितं पीठम् (मध्यमपदलोपिकर्मधारय); मणिपीठम्; मणिपीठे शयाते इति तौ। राजशिरःस्रजाम् —राज्ञां शिरः (ष० तत्पु०) राजशिरः, राजशिरसः स्रजः (ष० तत्पु०) तासाम्। अरञ्जयत्— रञ्ज् + णिच् + लङ्, प्र० एक०। मृगद्विजालूनशिखेषु— द्विः जाता इति द्विजाः; मृगाश्च द्विजाश्चेति मृगद्विजाः (द्वन्द्व);

मृगद्विजैः आलूनाः (तृ० तत्पु०), इति मृगद्विजालूनाः, मृगद्विजालूनाः शिखा येषु (बहु०) ते, तेषु। निषीदतः— नि+सद् लट् प्र० द्वि०।

**विशेष**— परिवर्त्तित दशा के वर्णन द्वारा युधिष्ठिर को युद्ध के लिए उत्तेजित किया है।

**हिन्दी**— राजाओं की मौलिमालाओं का पुष्पपराग रत्न-निर्मित पादपीठ पर निहित जिन चरणों को रञ्जित करता था, वे चरण अब हरिणों और ब्राह्मणों के द्वारा छिन्न कुशोंवाले वनों में विश्राम पाते हैं॥ ४०॥

**द्विषन्निमित्ता यदियं दशा ततः**
**समूलमुन्मूलयतीव मे मनः।**
**परैरपर्यासित वीर्यसम्पदां**
**पराभवोऽप्युत्सव एव मानिनाम्॥४१॥**

**अन्वयः**—यत् इयं दशा द्विषन्निमित्ता ततः मे मनः समूलम् उन्मूलयतीव। परैः अपर्यासित वीर्यसम्पदां मानिनां पराभवः अपि उत्सवः एव।

**व्याख्या**—यद् यतः कारणाद् इयं दशाऽवस्था द्विषन्तो निमित्तं यस्याः सा, अतो मे मनः समूलं साशयम् उन्मूलयतीव उत्पाटयतीव। दैवी त्वापन्न दुःखायेत्याहपरैरिति। परैः शत्रुभिरपर्यासिताऽपर्यावर्त्तिता वीर्यसम्पद् येषां तेषां मानिनां मानहानिदुस्सहा, न त्वापदिति भावः।

**वाच्यपरिवर्त्तनम्**—यदनया दशया द्विषन्निमित्तया (भूयते) ततः मे मनः समूलम् उन्मूल्यते इव। परैः अपर्यासितवीर्यसम्पदां मानिनां पराभवेन अपि उत्सवेन (भूयते)।

**व्याकरणम्**—द्विषन्निमित्ताः—द्विषन्तः निमित्तं यस्याः (बहु०) सा। समूलम् - मूलेन सह वर्त्तते इति (बहु०)। उन्मूलयति—उद्+

मूल + णिच् + लट् प्र० एक०। अपर्यासित वीर्यसम्पदाम्—न पर्यासिता (नञ् तत्पु०) अपर्यासिता, अपर्यासिता वीर्यसम्पद् येषां ते, (बहु०) तेषाम्। मानिनाम्—मानोऽस्यास्तीति मानी, तेषाम्।

**विशेष**—अर्थान्तरन्यासः। मानहानि असह्य होती है, विपत्ति असह्य नहीं होती। राजा लोग वीर रस के आश्रय से सफलता को पाते हैं। मुनि लोग शान्तता से मुक्तिलाभ करते हैं। मुनियों के लिए वीरता उपयुक्त नहीं; राजाओं के लिए शान्तता उपयुक्त नहीं।

**हिन्दी**—आपकी जो यह दशा शत्रु के कारण हुई है, वह मेरे अन्तःकरण को मानों मूल से उखाड़ रही है। जिनके बल और पराक्रम को शत्रु भी तिरस्कृत नहीं कर सकते, ऐसे मानियों का पराभव भी उत्साहवर्द्धक ही होता है ॥४१॥

**विहाय शान्तिं नृप ! धाम तत्पुनः**
**प्रसीद सन्धेहि वधाय विद्विषाम्।**
**व्रजन्ति शत्रूनवधूय निस्स्पृहाः**
**शमेन सिद्धिं मुनयो न भूभृतः ॥४२॥**

**अन्वयः**—नृप ! शान्तिं विहाय तत् धाम विद्विषां वधाय पुनः सन्धेहि प्रसीद। निस्स्पृहाः मुनयः शत्रून् अवधूय शमेन सिद्धिं व्रजन्ति, भूभृतः न।

**व्याख्या**—हे नृप ! शान्तिं विहाय तत् प्रसिद्धं धाम तेजो विद्विषां वधाय पुनः सन्धेहि अङ्गीकुरु प्रसीद। ननु शमेन कार्यसिद्धौ किं क्रोधेनेत्यत्राह—व्रजन्तीति। निस्स्पृहाः मुनयः शत्रून् अवधूय निर्जित्य शमेन क्रोधवर्जनेन सिद्धिं व्रजन्ति, भूभृतस्तु न। कैवल्यकार्यवद् राजकार्यं न शान्तिसाध्यमित्यर्थः।



**वाच्यपरिवर्त्तनम्**—नृप ! शान्तिं विहाय तद् धाम विद्विषां

वधाय पुनः सन्धीयताम्, प्रसद्यताम्। निस्स्पृहैः मुनिभिः शत्रून् अवधूय शमेन सिद्धिः व्रज्यते, भूभृद्भिः न।

**व्याकरणम्**—विहाय—वि+हा+क्त्वा (=ल्यप्)। सन्धेहि—सम्+धा+लोट्, म० एक; लगाओ।

निस्स्पृहाः—निरस्ता स्पृहा येषां (बहु०) ते। अवधूय—अव+धू+क्त्वा (=ल्यप्)।

**विशेष**—शान्तिकार्य मुनियों के लिए हितकर होता है, राजाओं के लिए नहीं।

सिद्धिः=(१) कार्यनिष्पत्तिः, (२) मोक्ष।

**हिन्दी**—महाराज! आप शान्ति को त्यागकर अपने पहले तेज का प्रयोग शत्रुओं का विनाश करने में कीजिए। निस्स्पृह मुनि लोग ही शान्ति के द्वारा शत्रुओं को जीत कर सफलता को पाते हैं, न कि राजा लोग ॥४२॥

पुरस्सरा धामवतां यशोधनाः
सुदुस्सहं प्राप्य निकारमीदृशम्।
भवादृशाश्चेदधिकुर्वते रतिं
निराश्रया हन्त हता मनस्विता ॥४३॥

**अन्वयः**—धामवतां पुरस्सराः यशोधनाः भवादृशाः सुदुस्सहम् ईदृशं निकारं प्राप्य रतिम् अधिकुर्वते चेत् हन्त मनस्विता निराश्रया हता।

**व्याख्या**—किञ्च धामवतां तेजस्विनाम्। पर निकारासहिष्णूनामित्यर्थः। पुरः सरन्तीति पुरस्सरा अग्रेसराः यशोधना भवादृशाः सुदुःसहम् अति दुस्सहम् ईदृशम् उक्तप्रकारं निकारं पराभवं प्राप्य रतिं सन्तोषम् अधिकुर्वते चेत् तर्हि हन्त इति खेदे मनस्विताऽभिमानिता

निराश्रया सती हता तेजस्विजनैक शरणत्वान्मनस्वितायाः इत्यर्थः। अतः पराक्रमितव्यमिति भावः।

**वाच्यपरिवर्त्तनम्**—धामवतां पुरस्सरैः यशोधनैः भवादृशैः सुदुस्सहम् ईदृशं निकारं प्राप्य रतिः अधिक्रियते चेत् हन्त निराश्रयया मनस्वितया (भूयते)।

**व्याकरणम्**—धाम अस्यास्तीति धामवान् तेषाम्। पुरस्सराः—पुरः सरन्तीति, अग्रगामी। यशोधनाः—यश एव धनं येषां (बहु०) ते। सुदुस्सहम्—अतिशयेन दुस्सहम्। निरकारम्—नि+कृ+घञ्, अपमान। प्राप्य—प्र+आप्+क्त्वा (ल्यप्)। अधिकुर्वते—अधि+कृ (आत्म०) लट् प्र० बहु०। मनस्विता—प्रशस्तं मनः येषाम्—मनस्+विनि (मत्वर्थे), ते मनस्विनः, तेषां भावः मनस्विता—महानुभावता।

**हिन्दी**—कीर्त्ति को ही धन माननेवाले तथा तेजस्वियों में अग्रसर आप-जैसे व्यक्ति इस प्रकार के अति दुस्सह पराभव को पाकर यदि सन्तोष कर लेते हैं तब हा! स्वात्माभिमान निरालम्ब होकर नष्ट हो जायगा ॥४३॥

अथ क्षमामेव निरस्तविक्रम-
श्चिराय पर्येषि सुखस्य साधनम्।
विहाय लक्ष्मीपतिलक्ष्म कार्मुकं
जटाधरः सञ्जुहुधीह पावकम् ॥४४॥

**अन्वयः**— अथ निरस्तविक्रमः चिराय क्षमाम् एव सुखस्य साधनं पर्येषि, लक्ष्मीपतिलक्ष्म कार्मुकं विहाय जटाधरः सन् इह पावकं जुहुधि।

**व्याख्या**— अथ पक्षान्तरे निरस्तविक्रमः सन् चिराय चिरकालेनापि क्षमां क्षान्तिमेव सुखस्य साधनं पर्येष्यवगच्छसि तर्हि लक्ष्मीपति-

लक्ष्म राजचिह्नं कार्मुकं विहाय जटानां धरो जटाधरः सन्निह वने पावकं जुहुधि। पावके होमं कुर्वित्यर्थः। विरक्तस्य किं धनुषेत्यर्थः।

**वाच्यपरिवर्त्तनम्**—अथ निरस्तविक्रमेण (त्वया) चिराय क्षमा एव सुखस्य साधनं परीयते, लक्ष्मीपतिलक्ष्म कार्मुकं विहाय जटाधरेण सता इह पावकः हूयताम्।

**व्याकरणम्**— निरस्तविक्रमः—निरस्तः विक्रमः येन (बहु०) सः। पर्येषि—परि+इ, लट् म० एक०। लक्ष्मीपतिलक्ष्म—लक्ष्म्याः पतिः (ष० तत्पु०), लक्ष्मीपतेः लक्ष्म (ष० तत्पु०)। जुहुधि—हु—लोट् म० एक०।

**विशेष**—"यदि तुम क्षमा को ही सुख का साधन मानते हो तब तुम राजचिह्न-स्वरूप धनुष को त्यागकर अग्नि में आहुति देते हुए विशुद्ध विरक्त जीवन व्यतीत करो। विरक्त व्यक्ति को धनुर्ग्रहण से क्या प्रयोजन?"—भावार्थ।

**हिन्दी**— यदि शौर्य को तिलांजलि देकर चिरकाल क्षमा को ही तुम सुख का साधन मानते हो तब राजा के चिह्नस्वरूप धनुष को त्यागकर और जटा बढ़ाकर यहीं बैठकर अग्नि में आहुति डालते रहो॥ ४४॥

**न समयपरिरक्षणं क्षमं ते**
**निकृतिपरेषु परेषु भूरिधाम्नः।**
**अरिषु हि विजयार्थिनः क्षितीशाः**
**विदधति सोपधि सन्धिदूषणानि ॥४५॥**

**अन्वयः**— परेषु निकृतिपरेषु भूरिधाम्नः ते समयपरिरक्षणं न क्षमम्। हि विजयार्थिनः क्षितीशाः अरिषु सोपधि सन्धिदूषणानि विदधति।

**व्याख्या**— परेषु शत्रुषु निकृतिः परं प्रधानं येषु तेषु । तथोक्तेष्वपकारतत्परेषु सत्सु भूरिधाम्नो महौजसः प्रतीकारक्षमस्य ते तव समयः त्रयोदशसंवत्सरान् वने वत्स्यामीत्येवंरूपा संवित् तस्य परिरक्षणं प्रतीक्षणं न क्षमं न युक्तम् । हि यस्माद् विजयार्थिनो विजिगीषवः क्षितीशा अरिषु विषये सोपधि सकपटं यथा तथा सन्धिदूषणानि विदधति केनचिद् व्याजेन दोषमापाद्य सन्धिं दूषयन्ति विघटयन्तीत्यर्थः । शक्तस्य हि विजिगीषोः सर्वथा कार्यसाधनं प्रधानमन्यत्समयरक्षणादिकमशक्तस्येतिभावः ।

**वाच्यपरिवर्त्तनम्**— परेषु निकृतिपरेषु भूरिधाम्नः ते समय परिरक्षणेन न क्षमेण (भूयते) । हि विजयार्थिभिः क्षितीशैः अरिषु सोपधि सन्धिदूषणानि विधीयन्ते ।

**व्याकरणम्**— परेषु—विषयसप्तमी; परः शत्रुः तेषु । निकृतिपरेषु—निकृति—अपमान, निकृतिपर—अपकार-तत्पर । निकृतिः परं येषां (बहु०) ते निकृतिपराः, तेषु । भावलक्षणां (=सति) सप्तमी ।
भूरिधाम्नः— भूरि धाम यस्य (बहु०) स भूरिधामा, तस्य ।
समयपरिरक्षणम्—समयस्य परिरक्षणम् (ष० तत्पु०); समय—तेरह वर्ष वन में रहने की प्रतिज्ञा । न क्षमम्— उचित नहीं ।
विजयार्थिनः— विजयम् अर्थयन्ते इति (उपपदतत्पु०) ते ।
क्षितीशाः— क्षितेः ईशाः (ष० तत्पु०) ।
सोपधि— उपधिना सह वर्त्तते (बहु०) इति सोपधि = सकपटम् ।
सन्धिदूषणानि— सन्धेः दूषणानि (ष० तत्पु०) ।
विदधति— वि + धा (=दध्) लट् प्र० बहु० ।

**विशेष**— विजिगीषु राजा शत्रु के साथ की गई सन्धि का शत्रु के द्वारा भंग बतलाकर स्वयं सन्धि का परिपालन नहीं करते । अशक्त मनुष्य ही सन्धि का परिपालन करता है, राजा नहीं करता ।

**हिन्दी**—जबकि शत्रु अपकार करने पर तुला हुआ है तब प्रचुर पराक्रमशाली आपको कालावधि समाप्ति की प्रतीक्षा करना उचित नहीं। विजय के इच्छुक नरपाल किसी-न-किसी बहाने शत्रु के साथ की हुई संधियों का शत्रु द्वारा परिपालन न करने में दोष निकालते हैं ॥ ४५ ॥

विधिसमयनियोगाद्दीप्तिसंहारजिह्मं
शिथिलवसुमगाधे मग्नमापत्पयोधौ।
रिपुतिमिरमुदस्योदीयमानं दिनादौ
दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ॥४६॥

**अन्वयः**—विधिसमयनियोगात् अगाधे आपत्पयोधौ मग्नं दीप्तिसंहारजिह्मं शिथिलवसुं रिपुतिमिरम् उदस्य उदीयमानं त्वां दिनादौ दिनकृतम् इव लक्ष्मीः भूयः समभ्येतु।

**व्याख्या**—विधिर्दैवम्, समयः कालः, तयोः नियोगान्नियमनाद् हेतोः तयोर्दुरतिक्रमत्वादिति भावः। अगाधे दुस्तरे। आपत् पयोधिरिवेत्युपमितसमासः। दिनकृतमिवेति वक्ष्यमाणानुसारात् तस्मिन् आपत्पयोधौ मग्नम् "सूर्योऽपि सायं सागरे मज्जति परेद्युरुन्मज्जती-त्यागमः। दीप्तिः प्रताप आतपश्च तस्याः संहारेण जिह्मम् अप्रसन्नम्, शिथिलवसुम् शिथिलधनम्, अन्यत्र शिथिलरश्मिम्, रिपुस्तिमिरमिवेति रिपुतिमिरमुदस्य निरस्य उदीयमानम् उद्यन्तं त्वां दिनादौ दिनकृतमिव लक्ष्मीः भूयः समभ्येतु भजतु। मालिनीवृत्तम्—सर्गान्तत्वाद् वृत्तभेदः।

**वाच्यपरिवर्त्तनम्**—विधिसमयनियोगात् अगाधे आपत्पयोधौ मग्नः दीप्तिसंहारजिह्मः शिथिलवसुः रिपुतिमिरम् उदस्य उदीयमानः त्वं दिनादौ दिनकृत् इव लक्ष्म्या भूयः समीयस्व।

विधिसमयनियोगात्—विधिश्च समयश्चेति विधिसमयौ (द्वन्द्व), विधिसमययोः नियोगः (ष० तत्पु०) तस्मात्। दैव और काल के अनतिक्रमणीय होने के कारण। आपत्पयोधौ—आपत् पयोधिरिव (उपमित कर्म०) तस्मिन्।

दीप्तिसंहारजिह्मम्—दीप्तेः संहारः (तृ० तत्पु०)। दीप्तिसंहारः, दीप्तिसंहारेण जिह्मः (तृ० तत्पु०) शिथिलवसुम्—शिथिलं वसु यस्य (बहु०) तम्। रिपुतिमिरम्—रिपुः तिमिरम् इव (उपमितसमासः)। उदस्य—उद् + अस् + क्त्वा = ल्यप्। दिनादौ—दिनस्य आदिः = दिनादिः (ष० तत्पु०) तस्मिन्। दिनकृतम्—दिनं करोतीति दिनकृत् (उपपद तत्पु०) तम्। समभ्येतु—सम् + अभि + इ लोट् प्र० एक०।

**विशेष**—परिकर अलंकार। विशेषण श्लिष्ट और साभिप्राय हैं।

"दिन के आरंभ में जैसे सूर्य अन्धकार का विनाश करके पुनः अपनी अतीत शोभा को पा लेता है, वैसे ही तुम भी शत्रुस्वरूप अन्धकार का नाश करके अपनी अतीत राजलक्ष्मी को पाओ।"

यहाँ पर सर्ग के अन्त में भी 'लक्ष्मी' शब्द का प्रयोग किया है, जो कि मङ्गलसूचक है। प्रत्येक सर्ग के आदि और अन्त के पद्य में 'श्री' अथवा तदर्थवाचक 'लक्ष्मी' आदि शब्दों का प्रयोग हुआ है।

**हिन्दी**—दैव और काल की चक्रगति से प्रताप के नाश होने के कारण विवर्ण एवं दरिद्रीभूत तथा अथाह विपत्ति के समुद्र में मग्न और अन्धकार सदृश शत्रुओं का नाश करके भाग्योदय के प्रथम चरण में वर्त्तमान आपको राजलक्ष्मी उसी प्रकार पुनः प्राप्त हो, जैसे कि उस सूर्यदेव को, जो भाग्य एवं समय की गतिविधि से आतप के विनष्ट होने के कारण मन्दरश्मि, प्रभारहित और निस्तेजस्क होकर सायं विपत्सागर में डूब गये थे, दिन के आरम्भ में शत्रुरूपी अन्धकार को समूल नष्ट करके उदय होते हुए शोभा प्राप्त होती है ॥४६॥

प्रथम सर्ग समाप्त

—:o:—

